# रामचरितमानसे ब्रह्मतत्त्वम्

श्रीभगवानपाठकः*

रामचरितमानसकारोऽपि वेदस्यापौरुषेयत्वम्मुक्तकण्ठमुज्जुघोष मानसे–

"जाकी सहज स्वास श्रुतिचारी।
सो प्रभु पढ़ यह अचरज भारी।।
वेद पुराण सुनहि मन लाई।
आप कहहि अनुजन्ह समुझाई।।"

परमेश्वरः सगुणः श्रीराम एव नान्यः। एवं मानसे वेदचतुष्टयमपौरुषेय–मेवेति वेदान्तापरपर्याया उपनिषदोऽपौरुषेया एव।

"अधृष्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः।"

इति च भगवान् स्वायम्भुवो मनुः। तेन रामचरितमानसे वेदाः एवोपबृंहिता। न च सिद्धसाधनम्, तत्तु समन्वयादिति सूत्रेण तन्निराकरणात्। आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् इति जैमिनिः आनर्थक्यमाह निवृत्ति–प्रतिपादकानामुपनिषदामिति वाच्यम्, जैमिनिना प्रवृत्तिमार्गप्रतिपादनात्। निवृत्ति–मार्गस्तुउत्तरमीमांसायां निणीत इति ब्रह्मनिरूपणात्। प्रवृत्तिनिवृत्योरुभयौरपि मार्गयोर्वैदिकत्वाभ्युपगमात्। अतएव 'वेदोऽखिलो धर्ममूलम्' इत्युपक्रम्य "कृत्स्नो वेदोऽधिगन्तव्यः सरहस्यो द्विजन्मना" इति सांगोपांगवेदाध्ययनविधानसंगतिः। 'ब्राह्मणेन निष्कारणं षडंगो वेदोऽध्येयो ज्ञेयश्च; इति पशपसाहिनके भगवान् पतंजलिः संगच्छते।

इत्थं रामचरितमानसमहाकाव्यम् श्रुतिस्मृतिपुराणमूलकं श्रीरामक्रीडा–प्रकाशनार्थं, रामरतिरसार्णवसौरस्य विस्तारेण जगतामुपकारमातनोति। मानस–दाहादिकं तु प्रज्ञापराध एव। तदुक्तमेव जनभाषानिबन्धकृता–

"कवि न होउं नहि चतुर कहावौं।
मति अनुरूप राम गुन गावउँ।।
एतनेहुँ पर ते करहिं असंका।
मोहिं ते अधिक ते जड मति रंका।।"

"एष ब्रह्म स्प्रष्टा श्रोता रसयिता मन्ता कर्त्ता विज्ञानात्मा पुरुषः"

***शोधच्छात्रः वेदवेदांगसाहित्यसंकायः महर्षिपाणिनिसंस्कृतएवंवैदिक विश्वविद्यालयः उज्जैन।**



इत्यादि श्रुतिप्रामाण्यात् ज्ञानाश्रयोऽपि जीवः सिद्धान्ते ज्ञानरूपस्तथापि ईश्वरः प्रत्यक्पदवाच्यः। यः स्वस्मै स्वयं प्रकाशते स प्रत्यक्। एवकारेण नित्यविभूतिध र्मभूतज्ञानयोर्ज्यो वृत्तिः। जीवस्य स्वरूपभूतं ज्ञानं धर्मिभूतज्ञानं तेन तदाश्रितम्, तद् गुणभूतेन ज्ञानेनाभिधीयते। 'सुखमहमस्वाप्समिति प्रतीत्या जीवः स्वयं प्रकाशते, ज्ञानत्वात् धर्मभूतज्ञानवत्' इत्यनुमानाच्च जीवेऽपि स्वप्रकाश– त्वसिद्धिः।

यद्यपि जीवस्य व्यापकताप्रतिपादकता 'आकाशवत् सर्वगतश्च नित्यः' इति श्रुते नित्यत्वमेवायाति, तथापि तस्याणुवेऽपि एककालावच्छेदकशरीरगत सुख–दुःखानुभवो न स्यात्। तथापि शिरसि मे वेदना पादयो में सुखम् प्रत्यक्षो मे न भवेत्' इति न वक्तव्यम्। आत्मनोऽणुत्वेऽपि शरीरैकदेशस्थितहरिचन्दनविन्दोः सकलशरीरव्याप्यानन्दजनकत्वात्, हृदयस्थितात्मनां ज्ञानधर्मेणैकैकत्वावच्छेदेन सम्पूर्ण शरीरे सुखदुःखानुभवो न विरुद्ध्यते। एवं जीवात्मनो व्यापकत्वं श्रुत्य– नुभवाश्रितत्वेन श्रद्धेयमेव। व्यापकत्वप्रतिपादक श्रुतिः ईश्वरविषयेति। तर्क– संग्रहादौ तु 'ज्ञानाधिकरणमात्मा। स द्विविधः। जीवात्मापरमात्मा च। जीवस्तु प्रति शरीरं भिन्नो विभुर्नित्यश्च। सर्वज्ञ ईश्वरस्त्वेक एव। न्यायनयेऽपि सगुणईश्वरः 'श्रीकृष्णाय वयं नुमः' इति स्मरणादिति संक्षेपः। बद्ध– मुक्त–बद्धमुक्तभेदस्त्रिविधो जीवः। गीतायाम्–

"न जायते म्रियते वा कदाचि–
न्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरः।।"

इत्यनेन जीवस्य ब्रह्मरूपतैवेति "जीवो ब्रह्मैव नापरः" इत्याहुः शंकरभगवत्पादाः। शरीरमनित्यं जनिमृतिमत्वात्। तथापि–

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिनषष्वजाते।
तयोरेकः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति।।"

इति श्रुतेः,

"ममैवांशो जीवलोके जीवभूतः सनातनः"

इति स्मृतेः

"अंशो नाना व्यापदेशाच्च"

इति ब्रह्मसूत्रे च जीवो विभुर्नित्यश्चेति परमार्थतः जीवोऽपि ब्रह्म सजातीय एव। इति जीवस्वरूपनिरूपणसंक्षेपः।

"जीव कि ईश समान" "राम मनुज कस रे शठ वंगा" इति रावणस्य पुरतःबालितनयवाक्याच्च प्रतीयते यत् ईश्वरः सर्वज्ञः जीवः अल्पज्ञः, ईश्वरः सर्वात्मा,

जीवस्तु अल्पात्मा, ईश्वरः सर्वशक्तिमान्, जीवः अल्पशक्तिमान्' इति जीवेश्वरयोरंशांशिभावोऽपि नित्य एव। तत्त्वदृष्ट्या जीवेश्वरयोरनन्यत्वमेवेति ''परं रामचन्द्रस्य दासश्चिदात्मेति' संक्षेपः।

उपनिषदां सिद्धान्त दृष्ट्या तु–

''सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमवापविद्धम्। कविर्मनीषीपरिभूः स्वयभूः याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः।''

इति मन्त्रः ब्रह्मणः स्वरूपं प्रकाशयति। ब्रह्म अनामरूपमपि सर्वनामानि सर्वरूपाणि विभर्त्ति। रामचरितमानसकारोऽपि–

''बिनु पद चलइ सुनइ बिनु काना।
बिनु कर कर्म करइ विधि नाना।।
आनन रहित सकल रस भोगी।
बिनु बानी वक्ता बड़ लोगी।।
तन बिनु परस नयन बिनु देखा।''
''अस सब भाँति अलौकिक करनी।
महिमा अमित जाइ नहिं बरनी।।''.

इति निर्गुण स्वरूपं निरूप्य पुनः–

''नील सरोरुह नीलमनि नील नीरधर श्याम।
लाजहि तन सोभा निरखि कोटि कोटि सत काम।।''

''सरद मयंक बदन छबि सीवा'' इत्यारभ्य 'छबि समुद्र हरिरूप बिलोकी'' इत्यन्ताद्या चतुष्पद्या सगुणस्वरूपमुपवर्णितम्। 'सत्यं विज्ञानमानन्दं ब्रह्मैव नामरूपरहितमपि चराचरब्रह्माण्डानामुत्पत्तिस्थितिलचकर्त्तृरूपैः विधिहरिहर रूपाणि बिभर्त्ति। अगुणोऽपि त्रयीमयः।

मानसेऽपि– मानसस्य लोकप्रसिद्धास्तुतिर्भाषाबद्धा गोस्वामिकृता–

''भये प्रकट कृपाला दीनदयाला कौसल्या हितकारी।
मायागुणज्ञानातीत अमाना वेदपुरान भनन्ता।।
सो मम हित लागी जन अनुरागी प्रगट भयउ श्रीकन्ता।।
ब्रह्माण्ड निकाया निर्मितमाया ...................।।
विप्र धेनु सुर सन्त हित लीन मनुज अवतार।
निज इच्छा निर्मित तनु माया गुन गोपार।।''

इत्यन्तया भाषास्तुत्या श्रीरामस्य निर्गुणस्यापि सगुणरूपता स्वेच्छामय शरीररूपता, प्राकृतसत्वादिगुणराहित्येऽपि अप्राकृतानन्तकल्याणगुणगणनिधान–रूपतादिकं वर्णयति। धर्मस्थापनाधर्मनिग्रहसाधुपरित्राणम्, असाधुनिग्रहः भक्ति–



योगविधानञ्चेति भगवदवतारप्रयोजनानि श्रुतिपुराणरामायणादौ प्रोक्तानि। तदनु–सारेणैव–

''सुरसमूह विनती करि पहुँचे निज निज धाम।
जगनिवास प्रभु प्रगटे अखिल लोक विश्राम।।''

इत्याह नानापुराणनिगमागमसारसर्वस्वसिद्धान्तमत एव रामचरितमानस–महाकाव्यं सांगोपांगवेदोपवृंहणमेवेति ऋतम्भराप्रतिभाऽशेषविशेषातीतं परब्रह्मतत्त्वं श्रीसीतारामयुगलएकमखण्डमद्वयमेव परतत्त्वमिति सर्वजनग्राह्यतामालोकपरमासेति संक्षेपः। वेदवेदान्तसारसर्वस्वं ब्रह्मैव सगुणपरमेश्वरश्रीरामः सच्चिदानन्दरूपमिति सर्वावगतस्वरूपता प्रतिष्ठापितेति तुलसीदासः प्राणिसद्भावसाम्राज्यसंस्थापनया विश्वकल्यां सम्पादयामासेति रामायणादवगम्यते।

ब्रह्मैवस्थलसूक्ष्मकारणात्मकस्य जगतः उपादानं निमित्तं च कारणम्। एवं श्रीरामः समस्त जगतां निमित्तकारणम्, प्रकृतिरूपादानकारणम्। ब्रह्म तु अभिन्न निमित्तोपादानं कारणम्। रामानन्दवेदान्ते श्रीरामः सर्वेषां कारणानामपि कारण–रूपः सगुणपरमेश्वर एव। तदुक्तं पुनराग्रेऽ.........

''यन्मायावशवर्त्तिविश्वमखिलं ब्रह्मादि देवासुराः।
यत्सत्वादमृषैव भाति सकलं रज्जौ यथाऽहेर्भ्रमः।
यत् पादप्लवमेकमेव हिमवाम्भोधेस्तितीर्षावताम्।
वन्देऽहं तमशेषकारणपरं रामाख्यमीशं हरिम्।।''

अर्थात् विश्वमखिलं राममायावशादेव उत्पत्तिस्थितिलयानाप्नोति। जडा–प्रकृतिः, चेतनश्च भोक्ता, उभावपि ब्रह्मणः शरीरम् 'जगत्सर्वं शरीरं ते'' इति वाल्मीकिः।

रामानन्दवेदान्तनये, रामचरितमानसीये दर्शने च, किं बहुना? वैष्णवदर्शने वेदान्ते च सगुणः परमेश्वरः श्रीरामः। स एव श्रीसनातनविष्णुः। प्रथमेऽध्याये सनातनविष्णुपदं ब्रह्मपर्याययुक्तं 'विष्णुः सर्वत्र वेशणाम्'' इति ब्रह्मपरमेवेति श्रीरामो साकारो निराकारश्च, मूर्त्तममूर्त्त एकमेव ब्रह्मेति सर्ववेदान्तनिर्णयः। सर्वे देववाचकाः शब्दाः ब्रह्मवाचका अपि भवन्ति। सामान्यवाचकानां पदानां विशेषार्थे पर्यवसानात्। तदुक्तं बोधायनेन–

''विशेषार्थेन सामान्याथोऽवसीयते।''

श्रीरामो ब्रह्मतारकम्'' इति च। ''जगज्जीवेश्वराः' ब्रह्मैवेति सर्वमेव सीयराम– मयमिति मानसकारोक्तिः सर्वं त्रिसत्यमेव–

''सीयराममय सब जग जानी।
करउँ प्रनाम जोरि जुग पानी।।

इति दर्शनं सर्वास्तित्वमूलं श्रीराम एवेति सुवचम्।

केवलाद्वैतवादिनस्तु निर्विशेषब्रह्मैवैकं पारमार्थिकं सत्यम्, अन्यत् सर्वं मिथ्यैव।तद् ब्रह्म यद्यपि नित्यशुद्धबुद्धमुक्तस्वभाववदपि बन्धनमुक्तं भवेति। तद् ब्रह्म निरतिशयमशेषविशेषातीतं नित्यं तद्भिन्नं सर्वमनित्यम्। एवमयं केवलाद्वैतवादः। इदमेव शङ्कराचार्यमतम्। उपलब्धब्रह्मसूत्रभाष्यकारेषु सर्वप्राचीनोऽयं वादः। तदनन्तरमेव विशिष्टाद्वैतवादः। रामानन्दोऽपि विशिष्टाद्वैतवादी राममेव सगुणं ब्रह्मेति वेदान्तदर्शनं व्याचष्टे। शुद्धाद्वैतमतं वल्लभाचार्यस्य, रुद्रसम्प्र– दायर्यम्। निम्बार्कस्य सनकादिसम्प्रदायः। पर्यन्ते सर्वे वादाः ब्रह्मात्मवादे पर्यवस्यन्ति।

रामचरितमानसकारः श्रीतुलसीदासः सीतारामयुगलैकशरणः सगुणपरमे– श्वरमेव श्रीरामं ब्रह्मेति स्वीकरोति। जीवः भगवच्छेशः। तुलसीदासःमहान् भागवतध र्मानुयायी पराभक्तिमेव मुक्तिदात्रीं स्वीकरोति। तदर्थं शरणागति– रावश्यिकी। तदुक्तम्–

''सनमुख होय जीव मोहि जबहीं।
जनम कोटि अघ नाशउँ तबहीं।।''

रावणस्यापि कृते कथयति–

''जौ सभीत आवा सरनाई।
रखिहउँ तात प्रान की नाई।।''

तदुक्तमादिकविनापि–

''सकृदेव प्रपन्नाय तथास्मीति च याचते।
अभयं सर्वभूतिभ्यो ददाम्येतद् व्रतं मम।।''

एवं प्रपत्तिरेव भगवत्कृपाप्रापिकाः। भक्तिर्मुक्तेर्गरीयसी। मन्त्यैव ब्रह्म– साक्षात्कार इति तत्त्वम्।

वेदान्तदृष्ट्या तुलना

नैव कदाचिदपि विस्मर्त्तव्यं यत् वेदान्तपदेन उपनिषद एव गृह्यन्ते। तद्भाष्यव्याख्यानालोचनाप्रत्यालोचनाग्रन्थास्तु निबन्धरूपाः। सिद्धान्तस्थापने तु उपनिषदामेव स्वतः प्रामाण्यमामनन्ति श्रीमद् व्यास प्रभृतयः। उपनिषत्सु ब्रह्मणो द्वे रूपे समाम्नायेते, 1–मूर्त्तम्, 2–अमूर्त्तञ्च। अमूर्त्तं ब्रह्म निर्गुणमशेषविशेषातीतं अद्वयात्मकम्। तदेव यदा स्वजनानुरूरूपाथं रूपाणि बिभर्त्ति तदा तदेव मूर्तं ब्रह्म शब्दस्पर्शरूपरसगन्धमयो भवति। अवतारवादः अमूर्तस्यागुणस्य विशेषाभिव्यक्तिः। तदुक्तं शुक्लयजुर्वेदे–

''प्रजापतिश्चरतिगर्भे अन्तरजायमानो बहुधा विजायते। तस्य योनिं परिपश्यन्ति धीराः तस्मिन् ह तस्थुर्भुवनानि विश्वा।।''

श्रीमद्भागवते प्रजापतिशब्देन मूर्त्तस्यैव ब्रह्मणो विवर्त्ताः सूत्ररूपेण क्रमशः



परिगणिताः। अयं मूर्त्तस्य ब्रह्मणः प्रयोजनवशात् प्राकट्यं अवतारशब्देन वर्ण्यते। अवताराणां नामरूपलीलाधामानि देशकालादिकं श्रुतिस्मृतिपुराणेषु विस्तरेण प्रतिपादितम्। प्रकारान्तरेण सृष्ट्यादीनामुत्पत्तिस्थितिलयाः अवतारकार्याणि। अवतारसूत्राणि मन्त्रब्राह्मणात्मकेऽपौरुषेयेवेदे सन्ति। तेषां पुराणोपपुराणादौ विस्तारः उपवृंहणमुच्यते। उपवृंहणपरम्परा आदिकाव्यरूपेण वाल्मीकिना प्रारब्धा। परन्तु लोकभाषायामिपमुपवृंहणपरम्परा अभिनववाल्मीकिविरुदभाजा श्रीतुलसीदासेन प्रारब्धा। रामचरितमानसे अमूर्त्त–मूर्त्तब्रह्मनिरूपणं सवबोधार्थमाम्नातम्। अन्य– तुलसीरचितग्रन्थेषु प्रायः सर्वेषामवताराणां वर्णनमुपलभ्यते। रामचरितमानसे रामावतार कथाविस्तारः रमणीयागिरा लोकबोधाय कृतः। जनभाषायामार्ष– पथीनमुपवृंहणं सर्वथा चमत्कारपूर्णमभूत्। हिन्दीभाषायामार्षोपवृंहण रामचरित– मानसादतिरिक्तं नैव अन्यत्र विलोक्यते। उपनिषत्सु मूर्त्तामूर्त्तब्रह्म वर्णितम्। रामचरितमानसे निर्गुणसगुणभेदयोः समन्वयः कृतः। तदुक्तं–

''व्यापक ब्रह्म निरञ्जन निर्गुण विगत विनोद।
सोइ अज भगति प्रेम बस कौसल्या के गोद।।''

एवं वेदपुराणरामायणादौ सगुणब्रह्म वर्णितम्। तदेव रामपदबोध्यम्। सगुणपरमेश्वरः श्रीरामः चिदचिदविशिष्ट सीतारामयुगलमेकमखण्डं ब्रह्मैवेति मानसवेदान्तयोरविरोधः।

इदमिह विशेषतो निवेदनीयं यत् सर्वे आचार्याः भगवदविभूतयः। सर्वे श्रुतिस्मृतिपुराणेतिहासान् स्वत प्रमाणरूपान् स्वीकुर्वन्ति। कुत्रापि विरोधो नास्ति। स्वसम्प्रदाय प्रसिद्ध्यर्थं, तर्काः युक्तयः, प्रमाणानि दीयन्ते। खण्डनमण्डन– परामर्शवाक्यान्यपि मिलन्ति। परन्तु पर्यन्ते सर्वे आचार्याः मूर्त्तामूर्त्तब्रह्मरूपयोः समादरमेव कुर्वन्ति। अतः मानसमहाकाव्यं हिन्दीभाषायामपि वेदान्तवेद– पुराणादिसम्मत भवति। श्रीमधुसूदनसरस्वतीपादानां सम्मतिरेव स्वतः मानस– महाकविस्तुलसीदासः निगमपदेन मन्त्रब्राह्मणारण्यकोपनिषदा अपौरुषेयत्वं प्रतिजानीते। रामस्तेषां दृशा परतत्त्वरूप एव। सगुण रामः वेदान्ततत्त्वरूप एव।

यथार्थतः षोडशखीस्ताब्दे चित्रकूटमण्डले प्रादुर्भूयायोध्यायां 'रामकथा' गुरुमुखादवगम्य काश्यां सांगोपांगं वेदमधीत्य विश्वनाथं साम्बमाराध्यमारुतिं अनुकूलीकृत्य प्रायः किञ्चिदधिकसार्धवर्षद्वयेन सप्तप्रकाण्डात्मकं रामचरितमानस नाम्ना स्वगिरा महाकाव्यमार्गेण पुरुषार्थभक्तिमुक्तिप्रदं वेदार्थोपवृंहणमेव कृतम्। अत एवाभिनवप्राचेतस नाम्ना विश्ववन्द्योऽयं महाकविरूपेण परां प्रतिष्ठां प्राप। वेदार्थोपवृंहणस्य सनातनशैली रामचरितमानसे पदे पदे परिदृश्यते। 'रामो विग्रहवान् धर्मः' इत्यार्षकविवाणी मानसे प्रतिफलति। रामराज्यादर्शः षोडश– शताब्द्यां

मुगलशासनकाले श्रीतुलसीदासेनैव प्रस्तुतः। अखण्डभारतवर्षस्य राजधर्मसापेक्षा सांस्कृतिकचेतना विश्ववारा' सम्प्रति आतंकहिंसा विघटनग्रस्तं भूमण्डल रिरक्षिषति। जम्बूद्वीपमध्यवर्त्तीहिमालय–क्षारसमुद्रयोर्मध्यवर्त्तिनी भारती– सन्ततिः स्वादर्शरूपं रामराज्यं संस्थापनाय प्रयतते। दुःखादारिद्रनिवृत्तिपूर्वक–सुखसम्पत्तिप्रगतिविकासादिभिः भारतवर्षः समृद्धिमेत्य विश्वकल्याणार्थं यतेदिति मानससन्देशः सन्तशिरोमणिगोस्वामिपादीया शुभाशंसा मानसरूपेण जनमानसे समुदेत्विति तदुक्तम् उत्तरकाण्डे–

''ज्ञानगिरा गोतीत अज माया मन गुन पार।
सोइ सच्चिदानन्द घन कर नर चरित उदार।।

मानसरहस्यं सीतारामयोरखण्डरतिरेवेति दिक्। गोस्वामी तुलसीदासः ब्राह्मणारण्यकोपनिषदां मन्त्रसंहितावदपौरुषेयत्वं स्वीकरोति–

''जाकी सहज श्वांस श्रुति चारी।
सो प्रभु पद यह अचरज भारी।।

इत्थ रामचरिताख्य जनवाणीभागीरथीसौरस्यास्वादमृदानार्थं परमोदारं रामामृतमहार्णवमन्थनोत्त्थमृतवर्षं परमरमणीयं महाकाव्यं सीतारामयुगलात्मकम–खण्डाद्वयानन्दमातनोति। तदुक्तं मानसमहाकविना–

एहि मँह रघुपति नाम उदारा।
अति पावन पुरान श्रुति सारा।।

रामारामरमणाभिन्नं ''रसो वै सः'' इति श्रुतिवेद्यं परमानन्दसारसर्वस्वं श्रीरामत्त्वमेव सन्मानससर्वस्वमिति परमार्थः।

सन्दर्भाः


1. रा0च0मा0 बा0का0
2. महाभाष्ये पश्पसाह्निके
3. रा0च0मा0 बा0का0
4. श्रौतार्थसंग्रहः उद्धृतम् चिदा0मी0 पृ0 366
5. चिदा0मी0 पृ0 367
6. रा0च0मा0 बा0का0
7. तदेव।
8. रा0च0मा0 मंगलम्
9. रुद्र0 2 अ0





10. रा0च0मा0 बा0का0
11. द्र0 वेद का स्वरूप और प्रामाण्य, परि0 उपनिषदों का अपौरुषेयत्व – वेदस्वरूप विमर्शः
12. रा0च0मा0 7/25
13. रा0च0मा0 बा0का0


****